आथर्वणिकाना मप्येक मेव भवितव्यम्; गोपथ मिति मुद्रितमस्य-चाग्र मसमग्र मेवेति मन्यामहे। 'ताण्डि'-नाम्ना महर्षिणा प्रकाशित रचितं चैतत् सर्वं मतएवैतत् ताण्ड्य मिति व्यपदिश्यते; छान्दोग्य मिति समाख्या त्वस्य सिद्धैव, सामवेदीयानां छन्दोगत्वप्रसिद्धेः। तदित्थं ताण्ड्यतिख्यातस्य ब्राह्मणस्यैव द्वितीयभागीयाध्यायद्वयात्मकं यत् प्रसिद्धं मन्त्रब्राह्मण मिति, तदेवैतत् सञ्जीवयितु मेव प्रबन्धः।

एवं मद्भुतशान्तिविधिरूप मद्भुतब्राह्मण मपि न मन्यान्तरम्; अपि सायणनिर्दिष्टस्य पञ्चाध्यायात्मकस्य द्वितीयस्य षड्विंशाख्यस्य,—अस्मदभिमतस्य त्रिंशदध्यायात्मकस्य प्रौढनामकस्य छान्दोग्याख्यभागस्य, अन्तिम पञ्चाध्याय; यथा च प्रसिद्धान्येव शतपथब्राह्मणाद्यन्तर्भूतान्यग्निब्राह्मणादीनि।

ननु प्रतिशाख मेकैक मेव ब्राह्मण मभ्युपगन्तव्यं चेत् सामविधानादीनां का गतिरिति? अत्र ब्रूमः,—अस्तु तेषा मनुब्राह्मणत्व मिति; सङ्गच्छेत च तथा "अनुब्राह्मणादिनिः (४. २. ६२.)"—इत्येतत्पाणिनीयसूत्रस्योदाहरणम्; अन्यथा शिरो नास्ति शिरोव्यथेतिवत् सूत्रं तदानर्थक्य मेव व्रजेत्; क्वापि अनुब्राह्मणग्रन्थादर्शनात्। निदानसूत्रादावपि यदुक्त मनुब्राह्मणं नाम, तदप्येतदभिप्रायेणैवेति। अतएव च ब्राह्मणवचनोद्धृतिः श्रूयते आर्षेये (२. १.) "अथापि ब्राह्मणं भवति"-इति॥

मन्त्राणा मृषिच्छन्दोदैवतविनियोगास्त्ववश्य मभ्युपेयाः। तथाहि शासनम्—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्र वा मीयते पापीयान् भवति (आ० ब्रा० १. १.)"—

इत्यादि । अतोऽत्र सर्वत्र ऋष्यादिबोधनाय च नूम यत्न कर्त्तव्य ।

यस्य मन्त्रस्य य प्रकाशको रचयिता वा स एव तस्य ऋषिरिति व्यपदेशभाग् भवति, मन्त्रब्राह्मणस्तुतमन्त्राणान्तु प्राय सर्वेषां रचयितारः प्रकाशयितारो वा ऋषिर्येषां इति प्राचीनैरपि तेषा मेक एव परमेष्ठी प्रजापति, परमेश्वर एवेति यावद्दाविलेन कल्पित इत्यनुभूयते, प्रकाशयिष्यते च तदेव प्रथममन्त्रव्याख्या नारम्भे एवैकत्र ।

प्रार्थनीयतया, वर्णनीयतया व्यवहरणीयतया वा यत् किञ्चनोपास्यम्, तत्सर्वं मेव देवतेति व्यपदिश्यते, तथैवेह सर्वत्र बोधयिष्यते च । दैवतविचारस्तु विशेषतो ज्ञातव्येत् सत्यव्रतादिते टीकाटीप्पन्याद्यन्विते शास्त्रीये निरुक्ते, सत्यव्रतानुवादसहिते सभाष्ये दैवतानुब्राह्मणे, सत्यव्रतस्य वैदिकसमालोचनस्य देवताशीर्षकाध्याये चेक्षणीय ।

मन्त्रब्राह्मणीयमन्त्रास्तु प्राय, सर्वं एव गोभिलीयसूत्रानुसारेण गृह्ये कर्मणि विनियोक्तव्या भवन्तीति सर्वत्रैवात्र व्याख्यानारम्भेषु यथायथ सूचयिष्यन्ते सह तात्परैर्गोभिलीयसूत्राणि च ।

छन्दांसि च तथा तत्र सर्वत्र व्याख्यानारम्भेष्वेव ज्ञापयिष्यन्ते, परन्तु नैव तानि सर्वाण्येव गुणविष्णुभट्टायनतिप्राचीनव्याख्यातृमतानुगानि भविष्यन्ति, अपि भविष्यन्त्येव मदनुसन्धानमूलकानि तद्विरुद्धान्यपीति, तदुभयो पक्षयो कतरो न्याय्य इति छन्द शास्त्रविद्भिः पक्षपातशून्यैर्धीमद्भिरेव विचारणीयम् । तद्विचारसाहाय्याय चेह वैदिकच्छन्द शास्त्रनिष्कर्षरूपाणि कतिचित् छन्दलक्षणानि च दर्शयाम । तथाहि—

( क )

| | छन्दांसि ७ | अतिच्छन्दांसि ७ | विच्छन्दांसि ७ |
|---|---|---|---|
| १ | गायत्री २४ | अतिजगती ५२ | कृतिः ८० |
| २ | उष्णिक् २८ | शक्वरी ५६ | प्रकृतिः ८४ |
| ३ | अनुष्टुप् ३२ | अतिशक्वरी ६० | आकृतिः ८८ |
| ४ | बृहती ३६ | अष्टिः ६४ | विकृतिः ९२ |
| ५ | पङ्क्तिः ४० | अत्यष्टिः ६८ | संकृतिः ९६ |
| ६ | त्रिष्टुप् ४४ | धृतिः ७२ | अतिकृतिः १०० |
| ७ | जगती ४८ | अतिधृतिः ७६ | उत्कृतिः १०४ |

( ख )

| छन्द.— | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

( ग )

| छन्दांसि | विराट् | निचृत् | शुद्धा | भूरिक् | स्वराट् |
|---|---|---|---|---|---|
| गायत्री | २२ | २३ | २४ | २५ | २६ |
| उष्णिक् | २६ | २७ | २८ | २९ | ३० |
| अनुष्टुप् | ३० | ३१ | ३२ | ३३ | ३४ |
| बृहती | ३४ | ३५ | ३६ | ३७ | ३८ |
| पङ्क्तिः | ३८ | ३९ | ४० | ४१ | ४२ |
| त्रिष्टुप् | ४२ | ४३ | ४४ | ४५ | ४६ |
| जगती | ४६ | ४७ | ४८ | ४९ | ५० |

अतिच्छन्दोविच्छन्दसोरप्येवमेव विराडादयः समूह्याः।

षड्‌विंशत्यक्षराया ऋचः स्वराड्गायत्रीच्छन्दो निर्णय उत विराडुष्णिक् छन्द इत्याद्याशङ्कानिरासार्थोक्तं पिङ्गलेन "आदितः सन्दिग्धे ( ३. ६१. )"—इति। तथाच सन्दिग्धच्छन्दस्के मन्त्रे आदिपाददर्शनादेव छन्दोनिर्णयः कर्त्तव्य इति च तत्सूत्रार्थः। तदेवं यद्यादिपादो गायत्र्याः स्यात् तर्हि स मन्त्रो स्वराड्गायत्रीच्छन्दस्क एव, यद्यादिपाद उष्णिहः स्यात्, तर्हि स मन्त्रो विराडुष्णिक्छन्दस्कः। एवं सर्वत्र।

( ख )

१ अथ गायत्रीच्छन्दः प्रथमम्।

| | |
|---|---|
| ८—८—८=२४ | त्रिपाद् गायत्री |
| ६—६—६—६=२४ | चतुष्पाद् ,, |
| ७—७—७=२१ | पादनिचृत् ,, |
| ६—८—७=२१ | अतिपादनिचृत् ,, |
| ९—९—६=२४ | नागी ,, |
| ६—९—९=२४ | वाराही ,, |
| ६—७—८=२१ | वर्द्धमाना ,, |
| ८—७—६=२१ | प्रतिष्ठा ,, |
| ६—६—७ =१९ | ह्रसीयसी ,, |
| १२—८ =२० | द्विपाद्विराट् ,, |
| ११—११—११=३३ | विराट् ,, |
| ६—७—११ =२४ | उष्णिग्गर्भा ,, |
| ७—६—७ =२० | अतिनिचृत् ,, |
| ५—५—५—५=२० | पदपङ्क्तिः ,, |
| (षट्कश्चैकः) ५—५—५—५—६=२६ | पदपङ्क्तिः ,, |
| ५—५—५—४=१९ | पदपङ्क्तिः ,, |
| ७—१०—७=२४ | यवमध्या ,, |
| ८—४—८=२० | पिपीलिकमध्या ,, |
| ५—६—६—६ =२३ | मधुमती ,, |
| ६—८—८ =२२ | ककुम्मती ,, |

२ उष्णिक्छन्दो द्वितीयम् ।

८—१२—८=२८ ककुबुष्णिक्
१२—८—८=२८ पुरउष्णिक्
८—८—१२=२८ परोष्णिक्
७—७—७—७=२८ चतुष्पादुष्णिक्
११—१२—४=२७ न्यङ्कुशिराः ,,
११—११—६=२८ तनुमध्या ,,
५—८—८—८=२९ अनुष्टुब्गर्भा ,,

| | | |
|---|---|---|
| ८—५—८—८<br>८—८—५—८ | २९ | पिपीलिकमध्या ,, |

( च )

३ अनुष्टुप्छन्दस्तृतीयम् ।

८—८—८—८=३२ चतुष्पादनुष्टुप्
१२—१२—८=३२ कृतिः ,,
८—१२—१२=३२ त्रिपात् ,,
१२—८—१२=३२ पिपीलिकमध्या ,,
५—५—५—५—५—६=३१ महापदपङ्क्तिः ,,
९—१२—९=३० कविराट् ,,
९—१०—१३=३२ नष्टा ,,
१०—१०—१०=३० विराट् ,,
१०—१०—११=३१ ,, ,,

( छ )

४ बृहतीच्छन्दश्चतुर्थम् ।

८—८—१२—८=३६ पथ्या बृहती

८—१२—८—८=३६ { न्यङ्कुसारिणी ,, / स्कन्धोग्रीवी ,, / उरोबृहती ,

८—८—८—१२=३६ उपरिष्टाद् बृहती

१२—८—८—८=३६ पुरस्ताद् बृहती

९—९—९—९=३६ चतुष्पाद् ,,

१०—१०—८—८=३६ ,, ,,

१२—१२—१२=३६ { ऊर्ध्वबृहती / महाबृहती / सतोबृहती

८—१०—१०—८=३६ विष्टारबृहती

१३—८—१३=३४ पिपीलिकमध्या ,,

९—८—११—८=३६ विषमपदा ,,

( ज )

५ पङ्क्तिश्छन्दः पञ्चमम् ।

१२—८—१२—८=४० सतः पङ्क्तिः

८—१२—८—१२=४० विपरीता ,,

८—८—१२—१२=४० आस्तारपङ्क्ति

१२—१२—८—८=४० प्रस्तारपङ्क्ति

८—११ १२—८=४० विष्टारपङ्क्ति

१२—८—८—१२=४० संस्तारपङ्क्ति

५—५—५—५=२० अक्षरपङ्क्ति

इय मेयाक्षरपङ्क्तिर्नाम कात्यायनमते पदपङ्क्तिर्गायत्री ,
हलायुधमते त्वेषा ५—५=१० इत्थ दशाक्षराभिकैवेति च ।

५—५—५—५—५—५—५—५=४० अक्षरपङ्क्ति

५—५—५—५—५=२५ }
४—६—५—५—५=२५ } पदपङ्क्ति

८—८—८—८—८—४० पथ्या ,,

१०—१०—१०—१०=४० चतुष्पदा ,,

( ७ )

६ त्रिष्टुप् छन्द प्रथम् ।

११—८—८—८—८=४३ पुरोज्योति त्रिष्टुप

८—८—११—८—८=४३ मध्येज्योति ,,

८—८—८—८—११=४३ उपरिष्टाज्ज्योति ,,

११—११—११—११=४४ चतुष्पाद् ,,

१२—१२—११—११=४४ }
११—११—१२—१२=४४ }
१२—११—१२—११=४४ } [illegible]
११—१२—११—१२=४४ }

१०—१०—१२—१२=४४ अभिसारिणी त्रिष्टुप्

९—९—१०—११=३९ विराट्स्थाना ,,

१०—१०—९—११=४० ,, ,,

११—११—११—८=४१ विराड्रूपा ,,

१२—१२—१२—८=४४ ज्योतिष्मती ,,

८—८ ८—८—१२=४४ महाबृहती ,, *

८—८—१२—८—८=४४ यवमध्या ,,

१०—१०—८—८=४४ पङ्क्त्युत्तरा, विराट्पूर्वा च

---

* एवंवोपरिष्टाज्ज्योतिर्नाम भवती त्रिष्टुप् ।

( ज )

७ जगतीच्छन्दः सप्तमम् ।

८—८—८—८—८—८=४८ षट्पदी जगती †
१२—१२—१२—१२=४८ चतुष्पाद् ,,
१२—८—८—८—८=४४ पुरोज्योति ,,
८—८—१२—८—८=४४ मध्येज्योतिः ,,
८—८—८—८—१२=४४ उपरिष्टाज्ज्योतिः ,,
८—८—८—१२—१२=४८ महासतोबृहती ,,
८ ८—७—६—१०—९=४८ महापङ्क्ति ,,

अत्र सर्वत्र मन्त्रेषु स्वाहा-पदं विहायैव छन्दो निर्णेतव्यम् ; गोभिलीयादिविनियोजकसूत्राद्यनुसारत एव तत्पदस्य हेयोपादेयत्वेन मन्त्रानवयवत्वसिद्धान्तात् । एवं यस्य कस्य च मन्त्रस्य यथाकथमपि छन्दस्त्वे सिद्धे यजुष्ट्वेन व्यपदेशोऽप्यन्याय्य एव ; त्रैष्टुभ्यादिच्छन्दोलक्षणानां वैयर्थ्यापत्तेरिति दिक् ।

यथाविधिमन्त्रोच्चारणमात्रत एव कार्येषु फलान्युत्पद्यन्त इति वादिना मपि गलेकुठारन्यायेन प्रयोक्तव्यमन्त्राणा मर्थबोधोऽतिप्रयोजनीय इत्यभ्युपेय एव , प्रामाणिकपरैर्वेदाद्यकर्तृभिरसकृत्तथैवोक्तेरन्यथा मन्त्रार्थपरधन्याना मपार्थतापत्तेश्च । तथाहि शिक्षावचनम्—

"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः"—इति ॥

'गीती' पदं देवीयदुर्गामाहात्म्यपाठकाना मिव स्वेच्छा-

---

† भरद्वाजायेन त्रिंशं षट् किल [illegible], तत्र [illegible] , [illegible] दिक् ।

शुभारत एव अर्थीयश्लोकादीनपि गायन् पाठकारी ; 'लिखित-पाठकः' यो हि नैव गुरुमुखाधीतविद्यः। निरुक्तग्रन्थे तु प्रथमाध्यायस्य षष्ठपादीयप्रथमादिखण्डचतुष्टये श्रुतिप्रमाणानि दर्शयन्नेवार्थज्ञानर्थज्ञयोः स्तुतिनिन्दे प्रतिपादिते विस्तरशः ; तत्रैवैतत् किञ्चिदुद्धरामीह। तथाहि —

"* * * अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ॥१
स्थाणुरयम्भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥
यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।
* * * ॥ २ ॥"—इति।

पातञ्जले महाभाष्येऽप्युक्तमेवमेव। तथाहि पस्पशायाम् —
"इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि।
* * * यदधीतमविज्ञातं * * *।
तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्"—इति।

अतएव मन्त्राणामनुष्ठानानुस्मारकत्वमपि निर्णीतं मीमांसा-दर्शने। तथाह्यधिकरणमालायाः प्रथमाध्यायस्य द्वितीयपादीय-चतुर्थाधिकरणे प्रथमवर्णकम् —

"मन्त्रा उरुप्रथस्वेति किमदृष्टैकहेतवः।
यागेषूत पुरोडाशप्रथनादेर्भासकाः।
ब्राह्मणेनापि तद्भानान्मन्त्राः पुण्यैकहेतवः।
न तद्भानस्य दृष्टत्वाद् दृष्टं वरमदृष्टतः ॥"—इत्यादि।

तदेवं सर्वथैव प्रतिपद्यते मन्त्राणामर्थज्ञानेऽप्यवश्यं यति-

तव्य मिति; तत एवैतद् व्याख्यानं सप्रयोजन मित्येतेनैवाभिधेय-सम्बन्धावप्याख्यातावित्यलं पल्लवितेन ।

अथ न ज्ञायते क्रियमाण मिदं व्याख्यान मपव्याख्यानं वा प्रतिपत्स्यते ? वेदार्थस्त्वतिसूक्ष्मोऽहन्तु स्थूलः स्थूलधीश्च ; अपि स्मर्यते चैवं नैरुक्तचर्योदये —

"सेयं विद्या श्रुतिमतिबुद्धिः,
तस्यास्तपसा पार मीप्सितव्यम्"—इत्येवमादि ।

मनुसंहितायां ब्रह्मचारितपोलक्षण मप्यभिहितम्—

"वेदाभ्यासो हि विप्रस्य तपः पर मिहोच्यते ।
आ हैव स नखाग्रेभ्यः परमं तप्यते तपः ।
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्"॥ इत्यादि ।

तादृशं तपस्तु गुरुणानुमतोऽह मप्यचरं यथाशक्ति ब्रह्मचर्ये, परं कथ मनुगच्छेयं ममास्ति तत्प्रभावो न वेति ? एतादृशामशङ्काकुलितचित्तस्यापि मे प्रवृत्तिः "न संशय मनारुह्य नरो भद्राणि पश्यति"—इति विष्णुशर्मवचनात् ; तदत्र समपिपातं याचे 'अन्धः सन्नयनलम्बनम्'—इति । स्मरामि चैतद् भट्टकुमारिलवचनम्—

"आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
न हि सद्वर्त्मना गच्छन् स्खलितेष्वपोद्यते ।"—इति शम् ।

---

॥ परिच्छेदसूची ॥



॥ सविषयमन्त्रसूची ॥

## ॥ मन्त्रप्रतीकसूची ॥

---

# ॥ अथ मन्त्र ब्राह्मणम् ॥

## ॥ अथ प्रथमः प्रपाठकः ॥

तत्र

### ॥ अथ प्रथम-खण्डः ॥

ॐ । देव सवितः प्रसुव यज्ञं प्रसुव
यज्ञपतिं भगाय । दिव्यो गन्धर्वः केतपूः
केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु ॥ १

मन्त्रस्यैतस्य ऋषिः प्रजापतिर्ऋषि (अथ सर्वेष्वेव एष ऋषिर्ज्ञेयः) : यजुरन्तरा विराट् छन्दः ; सविता देवता, अभिषवे विनियोगः —शां० गृ० १,१,१,४ सू० ।

हे 'देव' सर्वत्र द्योतमान । 'सवितः' जगत्प्रसवितः ! त्वम् 'यज्ञं' इदं कर्म्म 'प्रसुव' अनुजानीहि । 'भगाय' कर्म्मफलभजनाय 'यज्ञपतिं' माम् 'प्रसुव' अनुजानीहि, अनुष्ठितकर्म्मफलभाजं मां कुर्विति यावत् । किञ्च, 'दिव्यः' द्युमध्यस्थः, 'गन्धर्वः' गां पृथिवीं धारयति यः सः, 'केतपूः' केतं प्रज्ञां चित्तं पुनाति यः सः, सूर्यः त्वत्प्रसादात् 'नः' अस्माकम् 'केतं' चित्तम् 'पुनातु' निर्म्मलीकरोतु । अपि 'वाचस्पतिः' वाचामधिपतिः देवः सोमाख्यः 'नः' अस्माकम् 'वाचं' गिरः 'स्वदतु' आस्वादयतु देवानिति शेषः । १

হে দ্যোতমান জগৎপ্রসবিতা দেবতা ! তুমি এই কর্ম্ম করিতে আমাকে অনুমতি দাও এবং এই কর্ম্মের ফলভাগী হইতেও আমাকে অনুমতি দাও ।

দ্যুলোকের মধ্যবিন্দুরূপে স্থিত, পৃথিবীর ধারয়িতা এবং সর্ব্বচিত্তপবিত্রকারী সূর্য্য দেবতা, তোমার প্রসাদে আমাদিগের চিত্তক্ষেত্র পবিত্র করুন এবং বাক্যের অধিষ্ঠাত্রী সোম দেবতাও আমাদিগের বাক্যকে সুমধুর করুন। ১

काम वेद ते नाम मदो नामासि
समानयामुं सुरा ते अभवत्। परमत्र
जन्माग्ने तपसो निर्मितोसि स्वाहा॥ २

अस्य पादनिचृद् ब्राह्म्यनुष्टुप्छन्दः, कामो देवता, प्रातिकर्मणि सुरया (जलेन) कन्या शिरः स्रावणे विनियोगः — गो० गृ० २,१,१० सू०।

हे 'काम'! 'ते' तव 'नाम' 'वेद' जानाति; सर्वं जगदिति शेषः। किम्भूतमित्याह—'मदः' मदकरः 'नाम' प्रसिद्धः 'असि' भवसि। 'ते' त्वदीया 'सुरा' त्वदीयं मादकत्वम् 'अभवत्' इह कन्यायां प्रादुर्भूतमिति यावत्। अतएव एतन्नामिकां कन्यकां 'समानय' सम्यक् प्रापय, 'अमुं' एतन्नामकं पतिमिति भावः। हे 'अग्ने' कामाग्ने! 'अत्र' कन्याशरीरे तव 'परं जन्म' उत्कृष्टा जनिः; भूतेति शेषः। त्वं 'तपसः' तपसे धर्म्माचरणाय 'निर्म्मितः' 'असि' भवसि; विधात्रेति शेषः। 'स्वाहा' शोभना उक्तिः 'एषा भवतु'—इति शेषः। सुरेति निघण्टावुदक-नामसु पञ्चविंशतितमं पदम्। तपस इति चतुर्थ्यर्थे षष्ठी॥ २

হে কাম দেবতা! তোমার নাম সকলেই বিদিত আছে; তুমি মাদক বলিয়া প্রসিদ্ধ। তৎসম্বন্ধী মাদকতা এই কন্যাতে প্রকাশ পাইয়াছে; অতএব ইহাকে এই নামক পতির সমীপে উপনীত কর। হে কামাগ্নে! এই কন্যাতে তোমার শ্রেষ্ঠ জন্ম হইয়াছে, তুমি ধর্ম্মাচরণের জন্যই বিধাতৃ কর্ত্তৃক সৃষ্ট হইয়াছ।—এই উক্তিটী সম্যক্ প্রতিপন্ন হউক। ২

इमन्त उपस्थ मधुना सꣳसृजामि
प्रजापतेर्मुखमेतद् द्वितीयम्।
तेन पुꣳसोभि भवासि
सर्वानवशान्वशिन्यसि राज्ञी स्वाहा॥२

अस्य स्वराट् ज्योतिष्मती त्रिष्टुप छन्द वाणी देवता आलिङ्गमपि मधुना लघोपस्थ लिपने विनियोग —गो० गृ० २,१,११ सू०।

हे कन्यके। 'ते' तव 'इमम्' 'उपस्थ' आनन्देन्द्रिय 'मधुना' 'ससृजामि' विलिम्पामि। 'एतत्' उपस्थ प्रजापते' स्रष्टुः 'द्वितीयम्' अपर मुखम्'। तेन' अनेनैव मुखप्रभावेण 'सर्वान्' 'अवशान् अपि पुंस' 'अभिभवासि' वशीकरोषि। अत 'वशिनी' पतिवशकारिणी त्वम् 'राज्ञी' स्वामिनी पति गृहस्य 'असि' भवसि। 'स्वाहा' उक्त मेतद् सम्यग भवतु॥ २

হে কন্যে। তোমার এই আনন্দেন্দ্রিয় মধু-লিপ্ত করিতেছি ইহা প্রজাপতির একটি মুখ (অর্থাৎ প্রজোৎপত্তির দ্বার), এই ইন্দ্রিয় প্রভাবেই সকল পুরুষ সকলকেও বশীভূত করিয়া থাক, অতএব পতিবশকারিণী তুমি পতি গৃহের স্বামিনী হইতেছ।—প্রার্থিত উক্তিটি সম্যক প্রতিপন্ন হউক। ॥ ৩

अग्निः क्रव्यादमकृण्वन् गुहानाः
स्त्रीणामुपस्थमृषयः पुराणाः।
तेनाज्यमकृण्वꣳ स्त्रैशृङ्ग त्वाष्ट्रं
त्वयि तद्दधातु स्वाहा॥ ४

अस्य उपरिष्टाज्ज्योतिस्त्रिष्टुप छन्द, वाणी देवता आलिङ्गमपि अग्नेन कन्यो पस्थधावन विनियोग —गो० गृ० २,१,१२ सू०।

'गुहानाः' गिरिगुहावासिनः, 'पुराणाः' पुरातनाः, 'ऋषयः' वसिष्ठाद्याः, 'स्त्रीणां' स्त्रीजातीनाम् 'उपस्थं' 'क्रव्यादम्' आममांसभक्षकम् 'अग्निम्' इति 'अकृण्वन्' स्वीकृतवन्तः । किञ्च 'तेन' संयुक्तं 'विश्वरूप'' 'विश्वरूप' पुरुषलिङ्गम् तेन निर्मितं, 'त्वष्टा'' त्वष्टा विश्वकर्मा जगत्स्रष्टा तद्देवताकं शुक्रम् 'आज्यम्' इति 'अकृण्वन्' निर्णयं कृतवन्तः । हे कन्ये ! 'तत्' शुक्रं 'त्वयि' त्वदीयोपस्थाग्नौ 'दधातु' स्थापयतु ; पतिरिति शेषः ।—उक्तमेतत् सुष्ठु भवत्विति ॥ ४

গিরিগুহাবাসী, পুরাতন, বশিষ্ঠাদি ঋষিগণ, স্ত্রীজাতির আনন্দে'ন্দ্রিয়কে আমমাংস ভক্ষক অগ্নি বলিয়া স্বীকার করিয়াছেন এবং বিশ্বকর্ম্মা (সর্ব্ব-স্রষ্টা) দেবতার ইচ্ছার তৎসংযোগে পুরুষেন্দ্রিয় হইতে প্রাদুর্ভূত শুক্রকে তোমার ঘৃত বলিয়া স্বীকার করিয়াছেন। হে কন্যে! সেই ঘৃত তোমার উপস্থাগ্নিতে পতি কর্ত্তৃক স্থাপিত হউক।—ইহা সম্যক্ স্বীকৃত হউক। ৪

या अकृन्तन्नवयन् या अतन्वत
याश्च देव्यो अन्तानभितो ततन्थ ।
तास्त्वा देव्यो जरसा संव्यय-
न्त्वायुष्मतीदं परिधत्स्व वासः ॥ ५

अस्य अथर्वोच्छन्दः प्रजापति देवता ; वस्त्रीयपरिधापने वि०—गो० गृ०२.१.१८ सू० ।

'याः' 'देव्यः' द्युतिमत्यः तन्तुवायस्त्रियः 'अकृन्तन्' कर्त्तितवत्यः ; एतस्य वस्त्रस्य सूत्राणि निर्मितवत्य इत्यर्थः, 'याः' 'अवयन्' व्रतवत्यः ; एतत्तन्तुसन्धानं कृतवत्यः, 'याः' 'अतन्वत'

विस्तारितवत्य : इदं परिधेयरूपं कृतवत्य, 'या च' 'अन्तान्' एतत्पटप्रान्तान् 'अभितः' उभयपार्श्वयो 'ततन्थ' तेनु अथितवत्य , 'ता 'देव्य' स्त्रे कन्ये । 'त्वा 'जरसा' जरान्त' यावत् 'सव्ययन्तु' परिधापयन्तु । हे 'आयुष्मति' दीर्घायुषि । 'इदम्' प्रकृतं 'वास' वसनम् 'परिधत्स्व' परिधानं कुरुष्व ॥ ५

যে দেবীরা এই বসনের সূত্র সকল প্রস্তুত করিয়াছেন যে দেবীরা ইহা বয়ন করিয়াছেন যে দেবীরা ইহাকে এই আকারে বিস্তৃত করিয়াছেন এবং যে দেবীরা ইহার উভয় পার্শ্বে র ছিলাঞ্চলম্ গ্রথন করিয়াছেন, হে কন্যে! সেই দেবীরা তোমাকে জরাবস্থা পর্য্যন্ত সোৎসাহে বস্ত্র পরিধান করাইতে থাকুন। হে আয়ুষ্মতি! এই বস্ত্র পরিধান কর ॥ ৫

परि धत्त धत्त वाससैनाꣳ
शतायुषीꣳ कृणुत दीर्घमायु ।
शतं च जीव शरदः सुवर्चा
वसूनि चार्ये विभजासि जीवन् ॥ ६

अस्य त्रिष्टुप्छन्दः, परिधापयित्री देवता, वधूवस्त्रपरिधापने वि० (गो० २।२।८)।

हे तन्तुवायस्त्रियः ! यूयम् 'शतायुषीम्' शतवर्षजीविनीम् 'एनां' कन्यकाम् 'वाससा' वस्त्रेण 'परि धत्त धत्त' चिरं परिधापयतेव । किञ्च एतदीयम् 'आयु' 'दीर्घं' वर्द्धितं 'कृणुत' कुरुत । एवम् परिधापयित्रीरभिधाय कन्यामाशास्ते—हे आर्ये !' आर्यजातीये ! त्वम् 'सुवर्चा' तेजस्विनी सती 'जीवन्' जीवन्ती 'वसूनि' ऐश्वर्याणि 'विभजासि' सम्भजस्व ॥ ६

হে বস্ত্রবয়নকারিণী স্ত্রীগণ ! তোমরা শতবর্ষজীবিনী এই কন্যাকে চিরদিনই বসন যোগাও এবং আশীর্ব্বাদ দ্বারা ইহার পরমায়ু বৃদ্ধি কর। হে দীর্ঘায়ুষ্মতি ! কন্যা ! তুমি তেজস্বিনী হইয়া শত শরৎ (শতবর্ষ) জীবিত থাক,—জীবিত থাকিয়া ঐশ্বর্য্য সকল ভোগ কর ॥ ৬

सोमोऽददद् गन्धर्वाय गन्धर्वोऽदददग्नये ।
रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ ७

अस्य त्रिष्टुप्छन्दः, सोमादयो देवता, प्रतिसमीपे कन्याग्रहणजपे विनियोगः ।
—गो० गृ० २,१,१९ सू० । ६

'सोमः' सूयतइति सोमः स्रष्टृदेवता इमां कन्यां "गन्धर्वाय" गां धारयति यः तस्मै आदित्याय मार्त्तण्डाय, मित्रे इति यावत् 'अददत्' प्रदात् समर्पयत् ; स च 'गन्धर्वः' आदित्यस्वरूपः पिता 'अग्नये अददत्' अग्निसमीपमधुना समर्पयत् ; साक्षिरूपेण स्थितः अग्निः 'मह्यं' परिणेत्रे 'अदात्' ; 'अथो' अपि 'रयिं' धनं 'पुत्रान् च' अदात्तस्मैदेवैत्याशासे ॥ ७

স্রষ্টা এই কন্যাকে পিতার হস্তে সমর্পণ করেন, পিতা এই অগ্নির নিকটে উপনীত করিয়াছেন, অগ্নি সাক্ষীরূপে উপস্থিত থাকিয়া আমাকে প্রদান করিলেন ; তথা করি এতৎসহ ধন-পুত্রাদিও আমাকে প্রদত্ত হইল। ৭

प्र मे पतियानः पन्थाः कल्पताम्
शिवा अरिष्टा पतिलोकं गमेयम् ॥ ८

विराड्गायत्रीच्छन्दः, पन्था देवता, कटप्रस्तरणे वि०—गो० २,१,२० सू० ।

'मे' मम 'पतियानः' पतिगृहगमनोपयुक्तः, 'पन्थाः' मार्गः 'शिवा' शिवः कल्याणकरः 'अरिष्टा' अरिष्टः, रिष्ट' विघ्नः, तच्छून्यश्च 'प्रकल्पताम्' प्रक्लृप्यताम् विनिर्दिश्यताम् जगत्पतिनेति शेषः। येन पथा 'पतिलोकम्' पतिगृहं 'गमेयम्' गच्छेयम् अहमिति शेषः ॥ ८

আমার পতিগৃহ গমনের পথ, জগৎপতিকর্তৃক কল্যাণকর ও বিঘ্নশূন্য কল্পিত হউক। যাহাতে আমি কল্যাণে ও নির্বিঘ্নে পতিগৃহে উপস্থিত হইতে

प्रास्याः पतियानः पन्थाः कल्पताम्
शिवा अरिष्टा पतिलोकं गम्याः ॥ ९

विराट्त्रिष्टुप् छन्दः। पन्था देवता। कन्याप्रस्थाने विनियोगः ( बौ० सवेद )।

हे जगत्पते ! त्वया 'अस्याः' कन्यायाः 'पतियानः' पतिगृह-गमनोपयुक्तः, 'पन्थाः' मार्गः 'शिवा' शिवः कल्याणकरः 'अरिष्टा' रिष्टं विघ्नः, तच्छून्यश्च 'प्रकल्पतां' प्रक्लृप्यताम्। हे कन्ये! येन पथा 'पतिलोकं' भर्त्तृगृहं 'गम्याः' उपेयाः; त्वमिति शेषः ॥ ९

জগৎপতি কর্তৃক এই কন্যার পতিগৃহে যাইবার পথ কল্যাণকর ও বিঘ্নশূন্য কল্পিত হউক। হে কন্যে! যে পথে তুমি কল্যাণে ও নির্বিঘ্নে পতিকুলে উপস্থিত হইতে পার। ৯

अग्निरैतु प्रथमो देवताभ्यः
सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्।
तदयं राजा वरुणोऽनु मन्यतां
यथेयं स्त्री पौत्रमघं न रोदात् स्वाहा ॥ १०

अस्य भुरिक्-त्रिष्टुप् छन्दः, अग्निर्देवता, आज्यहोमे विनियोगः — गो० गृ० २,१,२४ सू०।

करोतु । हे 'मृत्यो !' 'यत्र' यः पन्थाः 'नः' अस्माकम् गन्तव्यात् 'अन्यः' भिन्नः, किञ्च 'देवयानात्' देवमार्गात् अपि 'इतरः' भिन्नः; तम् 'परं' अपरं पितृलोकीयम् 'पन्थां' पन्थानम् 'अनु' संलक्ष्य 'परेहि' पराङ्मुखो गच्छ । 'चक्षुष्मते' प्रायशस्त्ये मतुप्, षष्ठ्यर्थे च चतुर्थी; तथाच चक्षुरिन्द्रियज्ञानविशिष्टस्य 'शृण्वते' प्रशस्त-श्रवणेन्द्रियज्ञानविशिष्टस्य च 'ते' तव सन्निधौ 'ब्रवीमि' एतत् प्रार्थये—'नः' अस्माकं 'प्रजां' सन्ततिसन्ततिम् 'उत'— विशेषतः 'वीरान्' पुत्रान् 'मा' रीरिषः मा हिंसीः ॥ १५ ॥ १

इति सामग श्रीसत्यव्रतसामश्रमिविरचितायां
"मन्त्रसञ्जीवनी" नाममन्त्रब्राह्मणव्याख्यायाम्
प्रथमप्रपाठकीयः प्रथमखण्डः ॥ १

---

মৃত্যু পরাঙ্মুখ গমন করুন, অমরভাব আমাদের উপস্থিত হউক। বৈবস্বত দেবতা আমাদিগের অভয় বিধান করুন। হে মৃত্যো! যে পথ আমাদিগের গন্তব্য নহে এবং যাহা দেবগণেরও গমনীয় নহে, সেই (প্রেতগণের) পথ লক্ষ্য করত পরাঙ্মুখ হইয়া গমন কর। উৎকৃষ্ট দর্শনজ্ঞান-বিশিষ্ট এবং উৎকৃষ্ট শ্রবণেন্দ্রিয়জ্ঞানবিশিষ্ট তোমার নিকটে প্রার্থনা করি—আমার পরিবারবর্গকে—বিশেষত পুত্রদিগকে বিনষ্ট করিও না ॥ ১৫ ॥ ১

সামবেদীয় মন্ত্রব্রাহ্মণের প্রথম প্রপাঠকীয় প্রথম খণ্ডের
সত্যব্রত সামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত ॥ ১

---

॥ अथ द्वितीय-खण्डः ॥

इम मश्मान मारोहाश्मेव त्वए स्थिरा भव ।
द्विषन्त मप बाधस्व मा च त्वं द्विषता मधः ॥ १

निचृदनुष्टुप् छन्दः, अश्मा देवता ; अश्माक्रमणे विनियोगः—गो॰ गृ॰ १,२,४ सू॰ ।

हे वधु ! 'इमम्' प्रत्यक्षम् 'अश्मानम्' शिलाखण्डम् 'आरोह' आक्राम । तथाच 'त्वम्' 'अश्मा इव' पाषाणवत् 'स्थिरा' अचला 'भव' ; अविच्छेदेन पतिकुले चिरं तिष्ठेत्यर्थः । किञ्च त्वं 'द्विषन्तम्' मच्छत्रुकुलम् 'अपबाधस्व' पीडय, 'च' 'त्वं' 'द्विषतां' तेषाम् 'अधः' अधस्तात् अधरभावेन स्थिता 'मा' 'भूः'—इति शेषः ; कदाचित् कथमपीति ॥ १

হে বধু! এই শিলাখণ্ডে আরোহণ কর,—তুমি এই প্রস্তরবৎ দৃঢ়রূপে ও অবিচলভাবে পতির গৃহে বাস কর। বধু! তোমার হিংসাদ্বেষী প্রভৃতি কর্ত্তব্যপরায়ণতা দৃষ্টে শত্রুকুলে মনঃপীড়া উপস্থিত হউক; তুমি শত্রুদিগের নিকটে কখনও কোনকালেই অপদস্থ হইও না ॥ ১

इयं नार्युपब्रूतेग्नौ लाजानावपन्ती ।
दीर्घायु रस्तु मे पतिः
शतं वर्षाणि जीवत्वेधन्तां ज्ञातयो मम स्वाहा ॥२

पिपीलिकमध्या भूरिक् बृहतीच्छन्द ; पतिर्देवता ; लाजहोमे वि॰—गो॰ गृ॰ १,२,६ सू॰ ।

'इयं' 'नारी' नववधू 'लाजान्' भ्रष्टव्रीहीन् 'अग्नौ' 'आवपन्ती' प्रक्षिपन्ती सती 'उप ब्रूते' अग्निसमीपे प्रार्थयति ।

किमित्याह—'मे' मम 'पतिः' 'दीर्घायुः' दीर्घजीवी 'अस्तु'; तथाच 'शतं वर्षाणि जीवतु' इति. किञ्च 'मम' 'ज्ञातयः' देवरादयः 'एधन्ताम्' परिवर्द्धन्ताम् । —'स्वाहा' उक्तमेतत् सुष्ठु सम्पन्नं भवतु ॥ २

এই নববধূ লাজাগুলি অগ্নিতে নিঃক্ষিপ্ত করতে অগ্নিসমীপে প্রার্থনা করিতেছেন—যে, "আমার পতি দীর্ঘজীবী হউন,—শতবর্ষ পরমায়ু লাভ করুন এবং আমার দেবর প্রভৃতি জ্ঞাতিরা পরিবর্দ্ধিত হইতে থাকুন" ।—এই প্রার্থনা সম্যক্ সম্পন্ন হউক ॥ ২ ॥

अर्यमणं नु देवं कन्या अग्नि मयक्षत । स इमां देवो अर्यमा प्रेतो मुञ्चातु मा मुतः स्वाहा ॥ ३

निचृत्त्रिष्टुप् छन्दः, अर्यमा देवता, लाजहोमे विनियोगः (गो० तत्रैव) ।

'उत' अपि, इयं 'कन्या' 'अर्यमणम्' अर्यमाख्यम् 'अग्निम्' तेजोविशेषं 'नु' निश्चयम् 'अयक्षत' अयष्ट, आर्षात् 'सः' पूजितोऽयमर्यमा देवः इमां कन्यकाम् 'इतः' पितृकुलात् 'माम्' उद्दिश्य 'प्र मुञ्चातु' प्रकर्षेण स्थिरतया मुञ्चतु; पैत्रं बन्धनं विच्छिद्य मह्यं चिराय ददातु इत्यर्थः ॥ ३

এবং এই কন্যা, অর্য্যমা নামক তেজোদেবতাকে নিশ্চয় অর্চ্চনা করিলেন, সেই অর্চ্চিত অর্য্যমা দেবতা ইঁহাকে পিতৃকুল হইতে বিচ্ছিন্ন করত আমাকে চিরস্থায়ীরূপে সমর্পণ করুন।—এই প্রার্থনা সম্যক্ সম্পন্ন হউক। ৩

पूषणं नु देवं कन्या अग्नि मयक्षत ।
स इमां देवः पूषा प्रेतो मुञ्चातु मामुत स्वाहा ॥ ४

यजुर्बृहती छन्दः, पूषा देवता, लाजहोमे विनियोगः (गो० सू०)।

'उत अपि, इयं कन्या', 'पूषणं' पूषनामकम् 'अग्निम्' तेजोविशेषं देवं 'नु' निश्चयम् 'अयक्षत' अयष्ट, आर्चीत्, 'सः' पूजितः 'पूषा देवः इमां' कन्यकाम् 'इतः' पितृकुलात् 'माम्' उद्दिश्य 'प्र मुञ्चातु' प्रकर्षेण स्थिरतया मुञ्चतु पैतृबन्धनं विच्छिद्य मह्यं चिराय ददात्वित्यर्थः ॥ ४

এবং এই কন্যা পূষা নামক তেজোদেবতাকেও নিশ্চয় অর্চনা করিলেন, সেই অর্চিত পূষা দেবতাও ইহাঁকে পিতৃকুল হইতে বিচ্ছিন্ন করত আমাকে নিশ্চিতরূপে সমর্পণ করুন।—এই প্রার্থনা সম্যক্ সম্পন্ন হউক॥ ৪

कन्यला पितृभ्यः पतिलोकं
यतीय मप दीक्षा मयष्ट ।
कन्या उत त्वया वयं धारा
उदन्या इवाति गाहेमहि द्विषः ॥ ५

प्रस्तारपङ्क्तिश्छन्दः कन्या देवता, लाजहोमे विनियोगः (गो० सू०)।

'पितृभ्यः' पितृमातृ-प्रभृतिभ्यः 'पतिलोकं' पतिकुलं 'यती' आगच्छती 'इयम्' 'कन्यला' कन्या, 'दीक्षाम्' 'अप' सावित्रीदीक्षां विनैव 'अयष्ट', आर्चीत, अग्निमिति। 'उत' अपि हे कन्ये! 'त्वया' सह एकीभूता 'वयम्' 'उदन्या

इमां त्व मिन्द्र मीढ्वः सुपुत्रां सुभगां कृधि ।
दशास्यां पुत्रानाधेहि पति मेकादशं कुरु ॥ १९

त्रिष्टुप्छन्दः, इन्द्रो देवता, जायां प्रार्थने विनियोग (गो० तदेव) ।

हे 'इन्द्र' ऐश्वर्यमहेन्द्र ! 'मीढ्व' पुत्रोत्पत्त्य सेक्ता तत्सेवित 'त्वम्' 'इमां' कन्यां 'सुपुत्रां' सत्पुत्रवतीं 'सुभगां' सौभाग्यशालिनीं 'कृधि' कुरु । किञ्च 'अस्यां' कन्यायां 'दश पुत्रान्' 'आधेहि' आधापय; तथा त्वास्या 'पतिम्' भर्तारं ते, सह सङ्गत्या 'एकादशं' एकादश्यं 'कुरु' ॥ १९

হে ঐশ্বর্য্যশালিন্ ! দেব । তুমি এই কন্যাকে সৎপুত্রবতী ও সৌভাগ্যশালিনী কর এবং ইহার গর্ভে দশটি পুত্র আধান করাও । ঐ দশের সহিত পতিকে গণনা করিলে যাহাতে ইহার একাদশ জনা গণ্য হইতে পারে ॥ ১৯

संम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि संम्राज्ञी भव संम्राज्ञी अधिदेवृषु ॥ २०

विषमपदानुष्टुप् छन्दः, कन्या देवता, सम्राज्ञीकरणे विनियोग (गो० तदेव) ।

कन्ये ! त्वं 'श्वशुरे' श्वशुरविषये 'संम्राज्ञी' प्रधाना 'भव' । 'श्वश्र्वां' 'संम्राज्ञी' 'भव' । 'ननान्दरि' 'संम्राज्ञी' 'भव' । 'देवृषु' देवरेषु 'अधि' अधिकृत्य 'संम्राज्ञी' भवेति अनुकर्षणीय. ; सर्वेषा मेव प्रीति मवाप्य तेषु सर्वेष्वेव स्वाधिपत्य स्थापने समर्था भवेति भाव: ॥ २०

হে কন্যে। তুমি নিজগুণে শ্বশুর, শ্বশ্রু, ননান্দা, দেবর প্রভৃতি তাবৎ পরিজনের উপরেই আধিপত্য করিতে সমর্থা হও অর্থাৎ সকলের প্রীতি-ভাজন হও॥২০

मम व्रते ते हृदयं दधातु
मम चित्तमनुचित्तं ते अस्तु ।
मम वाचमेकमना जुषस्व
बृहस्पतिस्त्वा नियुनक्तु मह्यम् ॥ २१ ॥ २

त्रिष्टुप् छन्दः । बृहस्पतिर्देवता, पत्नीमानयनार्थे विनियोगः (गो० गृह्य)।

कन्ये । 'बृहस्पतिः' जगत्पतिर्देवः 'ते' तव 'हृदयं' 'मम व्रते' मदीये कर्मणि 'दधातु' धारयतु 'ते' 'चित्तं' 'मम' 'अनुचित्तम्' 'अस्तु' तत्प्रसादादेवेति । त्वम् 'एकमनाः' सती 'मम' 'वाचम्' 'जुषस्व' सेवस्व, तत्प्रसादादेवेति । स एव बृहस्पतिः 'त्वा' त्वां 'मह्यं' 'नियुनक्तु' मां प्रसादयितुं प्रेरयत्विति ॥ २१

इति सामश्रमीसत्यव्रतसामश्रमिविरचितायां
"मन्त्रसञ्जीवनी"-नाममन्त्रब्राह्मणव्याख्यायाम्
प्रथमप्रपाठकीयो द्वितीयखण्डः ॥ २

হে কন্যে। এই বৃহৎ-জগতের পালয়িতা দেবতা তোমার হৃদয় আমার কার্য্যে নিযুক্ত করুন। তাঁহার প্রসাদেই তোমার চিত্ত আমার চিত্তের অনুগামী হউক। তাঁহার প্রসাদেই তুমি একমনা হইয়া আমার আজ্ঞা প্রতিপালন কর। তিনি তোমাকে আমার মনোরঞ্জনে সতত নিযুক্ত রাখুন॥ ২১

সামবেদীয় মন্ত্রব্রাহ্মণের প্রথমপ্রপাঠকীয় দ্বিতীয় খণ্ডের
সত্যব্রত সামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত॥ ২

॥ अथ तृतीय-खण्डः ॥

लेखासन्धिषु पक्ष्मस्वावर्त्तेषु च यानि ते।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ १

लेखादीनां मन्त्राणां प्रथमा विराडनुष्टुप् एकस्का द्वितीयाद्यो निचृदनुष्टुपो, त्वाष्टृप्
अभिधीयमाना देवता, वध्वादोषोपशमनहोमे विनियोगः —गो० ग०२,२,४ सू०।

हे वधु! 'ते' तव 'लेखा-सन्धिषु' सीखानां रेखाणां सन्धानेषु भालकरतलादिषु, 'पक्ष्मसु' चक्षुर्लोमसु 'च' अपि 'आवर्त्तेषु' नाभिरन्ध्रादिषु 'यानि' पापानि अनुष्ठितानि, पाप-चिह्नानि वा सन्तीति शेषः;—अहं परिणेता 'तानि सर्वाणि' 'पूर्णाहुत्या' अनया 'शमयामि' उपशमयामि; तत्तद्दूषणानि वारयामीति यावत् ॥ १

(হে বধু। তোমার কেশাঙ্কিত ললাটস্থ রেখাদি মধ্যে, চক্ষুরিন্দ্রিয়ের পরিবর্ত্ত পক্ষসকলে এবং নাভিকূপাদি প্রদেশে, যে কোন পাপ অনুষ্ঠিত হইয়াছে বা অমঙ্গল চিহ্ন প্রকাশিত আছে, আমি এই পূর্ণ-আহুতির দ্বারা সেসমস্তই উপশমিত করিতেছি। ১

केशेषु यच्च पापकमीक्षिते रुदिते च यत्।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ २

हे वधु! 'यत्' 'पापक' पाप मनुष्ठित मशुभकर चिह्नं वा 'ते तव 'केशेषु' अस्तोति शेषः, 'च' अपि 'ईक्षिते दर्शन क्रियायाम्', 'च' अपि 'रुदिते' रोदने 'यत्' अस्ति,—प्रकटी भवति;—'अहं' इत्यादि पूर्ववत्॥ २

হে কন্যে ! তোমার কেশপাশে যে অশুভ চিহ্ন প্রকাশিত আছে এবং তোমার ঈক্ষণে, রোদনে যে কোন পাপ অনুষ্ঠিত হইয়াছে বা সময়ে সময়ে অশুভচিহ্ন প্রকাশ পায়,—আমি এই পূর্ণ-আহুতির দ্বারা তৎসমস্তই উপশমিত করিতেছি ॥ ২

शीलेषु यच्च पापकं भाषिते हसिते च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ३

हे कन्ये ! 'ते' तव 'शीलेषु' स्वभावेषु 'यत्' 'पापकं' प्रकटीभूतम्, 'च' अपि 'भाषिते' भाषण-क्रियायाम्, 'च' अपि 'हसिते' हसन-क्रियायां 'यत्' पापकम् अनुष्ठितम्, अशुभचिह्नं वा प्रकटीभवति ,—'अहम्' इत्यादि पूर्ववत् ॥ ३

হে কন্যে ! তোমার স্বভাবসমূহে যে কোন পাপ হইয়াছে বা প্রকাশ পায় এবং তোমার কথনে হসনে যে পাপ অনুষ্ঠিত হইয়াছে বা অশুভ চিহ্ন প্রকাশ পায়,—আমি এই পূর্ণ আহুতির দ্বারা তৎসমস্তই উপশমিত করিতেছি ॥ ৩

आरोकेषु च दन्तेषु हस्तयोः पादयोश्च यत् ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ४

हे कन्ये ! 'ते' तव 'आरोकेषु' दन्तान्तरालेषु, 'च' अपि 'दन्तेषु', 'हस्तयोः', 'पादयोः' 'यत्' पापकम् अनुष्ठितं पापचिह्नं वा विद्यते,—'अहम्' इत्यादि पूर्ववत् ॥ ४

হে কন্যে ! তোমার মস্তকের কেশগুলিতে এবং স্তনমণ্ডলে, হস্তদ্বয়ে ও পাদদ্বয়ে যে পাপ অনুষ্ঠিত হইয়াছে বা অশুভ চিহ্ন আছে —আমি এই পূর্ণ আহুতির দ্বারা তৎসমস্তই উপশমিত করিতেছি ॥ ৪

ऊर्व्वोरुपस्थे जङ्घयोः सन्धानेषु च यानि ते ।
तानि ते पूर्णाहुत्या सर्वाणि शमयाम्यहम् ॥ ५

हे कन्ये ! 'ते' तव 'ऊर्व्वोः' जानूपरिभागयोः, 'उपस्थे' प्रजननेन्द्रिये, 'जङ्घयोः' जान्वधोभागयोः, 'च' अपि 'सन्धा-नेषु' जान्वादिसन्धिप्रदेशेषु 'यत्' पापकं मनुष्ठितं पापचिह्नं वा विद्यते,—'अहं' इत्यादि पूर्ववत् ॥ ५

হে কন্যে ! তোমার ঊরুদ্বয়ে, জননেন্দ্রিয়ে জঙ্ঘাদ্বয়ে এবং জানু প্রভৃতি সন্ধিপ্রদেশে যে কোন পাপ অনুষ্ঠিত হইয়াছে বা পাপ চিহ্ন আছে, —আমি এই পূর্ণ আহুতির দ্বারা তৎসমস্তই উপশমিত করিতেছি ॥ ৫

यानि कानि च घोराणि सर्व्वाङ्गेषु तवाभवन् ।
पूर्णाहुतिभि राज्यस्य सर्वाणि तान्यशीशमम् ॥ ६

'च' अपि हे कन्ये ! 'तव' सर्व्वाङ्गेषु समस्तशरीरावयवेषु 'यानि कानि' 'घोराणि' पापानि अनुष्ठितानि, अशुभचिह्नानि वा 'अभवन्',—'अहं' 'तानि' सर्वाणि, 'आज्यस्य' घृतस्य 'आहुतिभि' 'अशीशमम्' उपशमितवानेवेति ॥ ६

এবং হে কন্যে ! তোমার সর্ব্বাঙ্গে যেসকল ঘোরতর পাপ অনুষ্ঠিত হইয়াছে অথবা অশুভচিহ্ন প্রকাশ পাইয়াছে,—এই ঘৃতের পূর্ণাহুতি প্রদান দ্বারা তৎসমস্তই উপশমিত করাইলাম ॥ ৬

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
ध्रुवासः पर्वता इमे ध्रुवा स्त्री पतिकुले इयम् ॥ ७

भुरिगनुष्टुप् छन्दः ; अभिधीयमाना देवता ; कन्यानुमन्त्रणे वि०—गो० गृ० २,१,११सू० ।

हे प्रार्थ्यमान-देव ! यथा इयं 'द्यौः' 'ध्रुवा' स्थिरा, इयं 'पृथिवी' 'ध्रुवा', 'इदं' दृश्यमानं 'विश्वम्' सर्वं 'जगत्' चराचरं 'ध्रुवम्', 'इमे' दृश्यमानाः 'पर्वताः' गिरयश्च 'ध्रुवासः' ध्रुवाः स्थिराः ; 'इयं' 'स्त्री' अपि तथैव अत्र 'पतिकुले' पतिगृहे 'ध्रुवा' स्थिरा भवत्विति ॥ ७

হে প্রার্থ্যমান দেব ! যেমন এই দ্যুলোক স্থিরভাবী, এই পৃথিবী স্থির-স্থায়িনী, এই পরিদৃশ্যমান সমস্ত চরাচর স্থিরভাবী, এই পর্ব্বতরাজিও স্থির-স্থায়ী ;—এই স্ত্রীও এই পতিগৃহে সেইরূপ স্থিরস্থায়িনী হউন । ৭

अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना ।
बध्नामि सत्यग्रन्थिना मनश्च हृदयं च ते ॥ ८

अनुष्टुप् छन्दः , मन्त्र देवता, वधूपरिधाने विनियोगः—गो० गृ० २ २,१० सू० ।

हे वधु ! 'ते' तव 'मनः' चित्तं 'च' अपि 'हृदयं' 'बध्नामि' बन्धनं करोमि ; स्ववशं नयामीति यावत् । कथम् ? इत्याह—'मणिना' मणितुल्येन अन्नपाशेन, अपि 'पृश्निना' चित्रवर्णरत्नसदृशेन 'प्राण-सूत्रेण', किञ्च 'सत्यग्रन्थिना' सत्यरूप ग्रन्थिना । अयं भावः—तुभ्यं यानीमानि अन्नानि भोजनाय

ददामि, तदेतद्दानमेव तव हृदयस्य मनसश्च बन्धनाय पाशो ज्ञेयः ; अत्र च पाशे मामकाः पञ्चविधाः प्राणा एव बहुवर्ण-शोभितानि चित्राणि सूत्राणि ज्ञेयानि ; एवञ्च मत्प्राणानपि त्वदधीनानेव करोमि ; एतादृशमानुगत्यमेव त्वद्धृदयमनसो-र्वशीकरणे बीजमिति भावः । तादृशसूत्रैः त्वद्धृदयमनोबन्धने तु ग्रन्थिः सत्यवचन प्रतिज्ञाकथनमिति ॥ ८

হে বধূ! তোমার মন ও হৃদয়, অন্নদানরূপ মণিসূত্র পাশে এবং প্রাণরূপ চিত্রসূত্র ও সত্যবচন গ্রন্থির দ্বারা বন্ধন করিতেছি। ৮

यदेतद्धृदयं तव तदस्तु हृदयं मम ।
यदिदं हृदयं मम तदस्तु हृदयं तव ॥ ९

अनुष्टुप् छन्दः , प्राणेशाना देवता ; जलवेशनार्थे विनियोगः ( गो० तदेव ) ।

हे वधु ! 'यत् एतत्' अनुभूतं 'तव' सम्बन्धि 'हृदयं' 'तत्' 'मम' सम्बन्धि 'अस्तु' भवतु, किञ्च 'मम' 'यत्' 'इदं' 'हृदयं' 'तत्' 'तव' 'अस्तु' ; सर्वेष्वेव विषयेषु आवयोरैकमत्यं भवत्विति । ९

হে বধূ! এই যে তোমার হৃদয় উহা আমার হউক অর্থাৎ তুমি মর্ম্ম বেদনা পাইলে সেই বেদনা আমার বলিয়া অনুভূত হউক এবং আমার এই হৃদয় তোমার হউক অর্থাৎ আমার মর্ম্মবেদনা তোমার মর্ম্মবেদনা হউক। চিরদিনই এইরূপ তোমার সুখ আমার সুখ, আমার সুখ তোমার সুখ এবং আমার দুঃখে তোমার দুঃখ, তোমার দুঃখে আমার দুঃখ অনুভূত হউক। ৯

अन्नं प्राणस्य षड्विंशस्तेन बध्नामि त्वासौ ॥ १०

प्राजापत्या गायत्रीच्छन्दः, अन्नं देवता, वधूबन्धने विनियोगः (गो० सूत्र)।

हे वधु! 'अन्नं' अदनीयं वस्तुजातं 'प्राणस्य' शरीरधारणस्य वायोः 'षड्विंशः' बन्धनं यतः, अतः 'तेन' अन्नेन 'त्वा' त्वां 'असौ' अहं 'बध्नामि' बन्धनं करोमि ॥ १०

হে বধূ! এই যে সমস্ত অদনীয় বস্তু,—ইহাই প্রাণের ষড়্‌বিংশ বন্ধন-স্বরূপ হইতেছে, অতএব এই অন্নদানে তোমাকে প্রিয় বন্ধন করিতেছি ॥ ১০

सुकिंशुकं शल्मलिं विश्वरूपं
सुवर्णवर्णं सुकृतं सुचक्रम्।
आरोह सूर्ये अमृतस्य नाभिं
स्योनं पत्ये वहतुं कृणुष्व ॥ ११

त्रिष्टुप् त्रिष्टुप् छन्दः, कन्या देवता, रथारोहणे विनियोगः—गो० सू० २,४,१ सू०।

हे 'सूर्ये!' यथा सूर्या तेजोरूपा सहतेजस्विनि! त्वम् इमं रथम् 'आरोह' अधितिष्ठ। कीदृशं रथमित्याह—'सुकिंशुकं' सुन्दरकुसुमैः सज्जितम्, 'शल्मलिं' शाल्मलिकाष्ठनिर्मितम्, 'विश्वरूपं' विचित्रम्, 'सुवर्णवर्णं' स्वर्णपीताभम्, 'सुकृतं' सुनिर्मितम्, 'सुचक्रं' सुन्दरचक्रोपेतम् किञ्च 'अमृतस्य' कल्याणस्य 'नाभिम्' उत्पत्तिस्थानम्, अतएव 'स्योनं' सुखोपवेशनस्थानमिति। आरुह्य च 'पत्ये' स्वपतिगृहगमनाय 'वहतुं' वहनं आत्मनः 'कृणुष्व' कुरुष्व ॥ ११

पुत्रादयः प्रजायध्वम् । 'च' विशेषतः 'इह' 'सहस्रदक्षिणोऽपि' सहस्रदक्षिणादानसमर्थोऽपि सुतरां 'पूषा' बहुपोषको जनः 'निषीदतु' अधितिष्ठतु ॥ १३

বধূ ও বরসম্বন্ধী এই গৃহে গোধন পরিবর্দ্ধিত হইতে থাকুক, এই গৃহে অশ্বসম্পত্তি পরিবর্দ্ধিত হইতে থাকুক এবং এই গৃহে পুত্রাদি বংশবৃদ্ধি হউক। বিশেষতঃ আশীর্ব্বাদ,—এই গৃহে সহস্র দক্ষিণা দানে সমর্থ (সুতরাং) বহুপোষক ব্যক্তি অবস্থিতি করুন। ॥ ১৩

इह धृति रिह स्वधृति रिह रन्ति रिह रमस्व ।
मयि धृति र्मयि स्वधृति र्मयि रमो मयि रमस्व ॥ १४ ॥ ३

बृहतीच्छन्दः, कन्या देवता, इतिहोमे विनियोगः —गो० गृ० २, ३ १० सू० ।

हे वधु ! 'इह' अस्मिन् गृहे तव 'धृतिः' धैर्य्यम् अस्तु । 'इह' तव 'स्वधृतिः' स्वैरात्मीयैः धृतिर्धारणम् एकत्र मिलनम् अस्तु । इह तव 'रन्तिः' रमणं चित्तस्य अस्तु । 'इह' 'रमस्व' रममाणा तिष्ठ । किञ्च 'मयि' मत्सविधे तव धृत्यादिकं विशेषेणास्तु इत्याह—धृति रित्यादि ॥ १४

इति सामगश्रीसत्यव्रतसामश्रमिविरचितायां
"मन्त्रसञ्जीवनी"-नाममन्त्रब्राह्मणव्याख्यायाम्
प्रथमप्रपाठकीयो द्वितीयखण्डः ॥ २

হে বধূ! এই গৃহে তোমার মতি স্থির হউক। এই গৃহে তুমি সানন্দে কাল যাপন কর।। এবং আমাতে তোমার মতি স্থির হউক আত্মীয়গণের সহিত তোমার মিলন হউক। আমাতে তোমার আসক্তি হউক। আমার সহিত তুমি সানন্দে কাল যাপন কর। ১৪

সামবেদীয় মন্ত্রব্রাহ্মণের প্রথমপ্রপাঠকীয় দ্বিতীয় খণ্ডের
সত্যব্রত সামশ্রমীর কৃত ব্যাখ্যার সমাপ্ত। ২

॥ अथ चतुर्थ-खण्डः ॥

अग्ने प्रायश्चित्ते
त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकाम उपधावामि
यास्याः पापी लक्ष्मीस्तामस्या अपजहि ॥१

यमलादयः पञ्च मन्त्रा निगदा , अग्न्यादिदेवताका , चतुर्थीहोमे वि०—गो०गृ०२,५,१ ।

'प्रायश्चित्ते' दोषाणां सुप्रशमितः ! हे 'अग्ने !' 'त्वं' 'देवानाम्' अस्मदादीनां 'प्रायश्चित्तिः' दोषाणां सुप्रशमिता 'असि' भवसि ; अतः 'नाथकामः' नाथः अधिनायकः मे कश्चन भूयादित्येवं कामनावान् अहं 'ब्राह्मणः' 'त्वा' त्वाम् 'उपधावामि' अभ्यर्थयामि 'अस्याः' वध्वाः 'पापी लक्ष्मीः' अशुभसम्बन्धिनी आभा 'या' काचिदपि अस्ति ; 'ताम्' दुष्टाभाम् 'अपजहि' अपगतां कुरु ॥ १

দোষসমস্তের উপশমকারিন্ । হে অগ্নে ! তুমি দেবগণের অর্থাৎ আমাদিগের দোষসমূহের উপশমকারী হইতেছ, অতএব নাথকাম (অর্থাৎ আমার কেহ নাথ সুরক্ষী হউন, এরূপ অভিলাষী) আমি ব্রাহ্মণ, তোমাকে অর্চনা করিতেছি, এই বধূর অমঙ্গল-আভা যাহা কিছু আছে, তাহা তুমি বিদূরিত কর । ১

वायो प्रायश्चित्ते
त्व देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकाम उपधावामि
यास्याः पतिघ्नी तनूस्ता मस्या अपजहि ॥ २

हे 'प्रायश्चित्ते' दोषाणा मुपशमित ! 'वायो' । 'त्व' 'देवा-नाम्' अस्मदादीनां 'प्रायश्चित्ति' दोषाणा मुपशमिता 'असि' भवसि, अत 'नाथकाम' अह 'ब्राह्मण' 'त्वा' त्वाम् 'उपधा-वामि', 'अस्या' वध्वा 'पतिघ्नी' पतिहननकारिणी 'तनू' 'या' स्यात्, 'अस्या' 'ता' तद्रूपलक्षणविशिष्टां तनूम् 'अपजहि' दूरत्व-विनिर्मुक्तां कुरु इत्यर्थ ॥ २

দোষ শম তর উপশমকারিন্! হে বায়ো! তুমি দেবগণের আমাদের দোষসমূহের উপশমকারী হইতেছ, অতএব নাথকাম আমি ব্রাহ্মণ তোমাকে প্রার্থনা করিতেছি, তুমি এই বধূর শরীরে পতিবিয়োগকারণ দোষ যদি থাকে, তাহা দূর করিয়া দাও॥ ২

चन्द्र प्रायश्चित्ते
त्व देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकाम उपधावामि
यास्या अपुत्र्या तनूस्ता मस्या अपजहि ॥ ३

हे 'प्रायश्चित्ते' दोषाणां सुपशमित । 'चन्द्र।' 'त्वं' हे अस्मदादीनां 'प्रायश्चित्ति' दोषाणां सुपशमिता 'असि', 'नाथकाम' अहं 'ब्राह्मण' 'त्वा' त्वाम् 'उपधावामि', 'अस्याः' 'अपुत्रा' पुत्राय हिता पुत्रा, तद्विपरीता वन्ध्यात्वादिदूषण दूषिता 'तनू' 'या' स्यात्, 'अस्याः' 'तान्' 'अपजहि' ॥ ३

হে দোষ সমস্তের উপশমকারিন্! হে চন্দ্র! তুমি দেবগণের আমাদের দোষসমূহের উপশমকারী হইতেছ অতএব নাথকাম আমি ব্রাহ্মণ তোমাকে অর্চনা করিতেছি, তুমি এই বধূর শরীরের বন্ধ্যা হইবার কারণ যদি কোন দোষ থাকে, তাহা দূর করিয়া দাও॥ ৩

सूर्य प्रायश्चित्ते
त्वं देवानां प्रायश्चित्तिरसि
ब्राह्मणस्त्वा नाथकाम उपधावामि
यास्या अपशव्या तनूस्तामस्या अपजहि ॥ ४

हे 'प्रायश्चित्ते' दोषाणां सुपशमित । 'सूर्य।' 'त्वं' 'देवानाम' अस्मदादीनां 'प्रायश्चित्ति' दोषाणां सुपशमिता 'असि', अत 'नाथकाम' अहं 'ब्राह्मण' 'त्वा' त्वाम् 'उपधावामि', 'अस्याः' 'अपशव्या' पशुभ्यो हिता पशव्या, तद्विपरीता पशुनाशदूषण दूषिता 'तनू' 'या' स्यात्, 'अस्याः' 'ताम्' 'अपजहि' ॥ ४

হে দোষ সমস্তের উপশমকারিন্ হে সূর্য! তুমি দেবগণের আমাদের দোষসমূহের উপশমকারী হইতেছ, অতএব নাথকাম আমি ব্রাহ্মণ তোমাকে অর্চনা করিতেছি তুমি এই বধূর শরীরের পশুগণের পক্ষে অমঙ্গলকর দোষ যাহা থাকে, তাহা দূর করিয়া দাও॥ ৪

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ ६

अनुष्टुप् छन्दः, विष्ण्वाद्या देवताः, गर्भाधाने विनियोगः —गो० गृ० २,५,८ सू०।

हे वधु। 'विष्णु' व्यापको देव 'ते', तव 'योनिं' गर्भस्थानं 'कल्पयतु' गर्भग्रहणोपयुक्तां करोतु। ततो गर्भे गृहीते 'त्वष्टा' अवयवस्रष्टा देवः तव 'रूपाणि' गर्भाकारान् 'पिंशतु' प्रकाशयतु। तमेव गर्भं 'प्रजापतिः' प्रजानां पालको देव 'आ सिञ्चतु' पोषयतु, रससेकेन जीवयतु। 'धाता' धारयिता देवश्च तमेव गर्भं 'दधातु' धारयतु। ६

হে বধূ। বিষ্ণু (ব্যাপক দেব) তোমার যোনি প্রদেশকে গর্ভগ্রহণের উপযুক্ত করুন। অনন্তর তাহাতে গর্ভ গৃহীত হইলে অবয়ব-রচনকারী ত্বষ্টা দেবতা তাহাতে গর্ভাকার প্রকাশ করুন। তৎপরে প্রজাগণের পালক দেবতা রস-সেচনের দ্বারা উহা জীবিত রাখুন। পরে ধারয়িতা দেবতা সেই গর্ভকে ধারণ-পোষণ করুন, যাহাতে ঐ গর্ভ বিনষ্ট না হয়। ৬

गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ७

अनुष्टुप् छन्दः, सिनीवाल्याद्या देवताः, गर्भाधाने विनियोगः (गो० तत्रैव)।

हे 'सिनीवालि' पूर्वामावास्ये। अस्या 'गर्भं' 'धेहि' धारय पोषय च। हे 'सरस्वति।' 'गर्भं धेहि' अस्मत्कथनादेतस्यां गर्भं

मस्तु इति भावः। हे वधु! 'अश्विनौ देवौ' द्यावापृथिव्यौ ते तव 'गर्भम्' 'आधत्ताम्' धारयताम्। कीदृशौ तावित्याह— 'पुष्करस्रजौ' पुष्करं नभस्तदेव स्रगिव स्रग् ययोः तौ, नभसा व्याप्तावित्यर्थः ॥ ७

হে পুষ্করমালাধারে! এই বধূর গর্ভ ধারণ-পোষণ কর। হে সরস্বতি! এই বধূর গর্ভ ধারণ-পোষণ কর। হে বধূ! এই অম্বর-মালাধারিণী দ্যাবাপৃথিবী তোমার গর্ভ ধারণ-পোষণ করুন। ৭

৩

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ।
पुमानग्निश्च वायुश्च पुमान् गर्भस्तवोदरे ॥ ८

अनुष्टुप् छन्दः, मित्रावरुणादयो देवता, पुंसवने वि०—गो० गृ० २,६,२ सू०।

हे वधु! यथा 'मित्रावरुणौ' अहोरात्रात्मकौ कालौ 'पुमांसौ' प्रजननशक्तिमन्तौ, तस्मिन्नेवैतत्समस्तस्य जायमानत्वात्; 'उभौ' 'अश्विनौ' अश्वाविव वेगगामिनौ द्यावापृथिव्यौ 'पुमांसौ', 'अग्निः' पार्थिवो देवः 'च' अपि 'वायुः' अन्तरीक्षस्थो देवः 'पुमान्';—'तव उदरे' अपि एवमेव 'पुमान् गर्भः' भूयादिति शेषः ॥ ८

হে বধূ! এই অহোরাত্রকালেই সমস্ত প্রজা উৎপন্ন হইয়াছে অতএব উহারা পুরুষ (প্রজনন-ক্রিয়াবান), অশ্বের ন্যায় বেগগামী এই দ্যাবাপৃথিবীও পুরুষ এবং এই পৃথিবীর দেবতা অগ্নি ও অন্তরীক্ষের দেবতা বায়ুও পুরুষ;—তোমার উদরেও এইরূপ পুরুষ গর্ভ অর্থাৎ পুত্র সমুৎপন্ন হউক। ৮

'पुमानग्निः पुमानिन्द्रः पुमान्देवो वृहस्पतिः ।
पुमाᳩसं पुत्रं विन्दस्व तं पुमाननु जायताम् ॥ ९

अनुष्टुप् छन्दः, अग्न्यादयो देवताः, पुंसवने विनियोगः —गो० गृ० २.६.११ सू० ।

हे वधु ! 'अग्निः' पार्थिवो देवः 'पुमान्', 'इन्द्रः' अन्तरीक्षस्थो देवोऽपि 'पुमान्'; 'वृहस्पतिः' वृहतां विपुलानां राशिचक्राणां पतिः पालकः सूर्य्यः द्युस्थो देवोऽपि 'पुमान्';—एवमेव त्वमपि 'पुमांसं' प्रजननशक्तिसम्पन्नं पुत्रमिति यावत् 'विन्दस्व' लभस्व। किञ्च 'तं' पुत्रम् 'अनु' पश्चादपि 'पुमान्' एव सन्ततिः 'जायताम्' तवोदरे इति शेषः ॥ ९

इति सामगवीयसत्यव्रतसामश्रमिविरचितायां
"मन्त्रसञ्जीवनी"-नाममन्त्रब्राह्मणव्याख्यायाम्
प्रथमप्रपाठकीयो द्वितीयखण्डः ॥ २

হে বধু! এই পৃথিবীর দেবতা অগ্নি, পুরুষ; অন্তরীক্ষের দেবতা ইন্দ্রও পুরুষ; এই অতিবিপুল রাশিচক্রের পালন কর্ত্তা বৃহস্পতিও (সূর্য্যও) পুরুষ;—তুমিও সেইরূপ পুরুষ সন্তান লাভ কর। অপিচ সেই সন্তানের পরে তোমার উদরে পরেও পুত্র সন্তান উৎপন্ন হউক ॥ ৯

সামবেদীয় মন্ত্রব্রাহ্মণের প্রথমপ্রপাঠকীয় দ্বিতীয় খণ্ডের
সত্যব্রত সামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত ॥ ২

॥ अथ पञ्चम-खण्ड ॥

अय मूर्ज्जावतो वृक्ष ऊर्जीव फलिनी भव ।
पर्णं वनस्पते नुत्वा नुत्वा सूयताᳬ रयिः ॥ १

अनुष्टुप छन्द वनस्पतिर्देवता सीमन्तोन्नयन प्रजापत्यने वि०—गो० गृ० २ ७,४ सू० ।

'ऊर्जावत' उदुम्बरफलस्य 'वृक्ष', 'ऊर्जी' बहुतेज सम्पन्न, 'प्रथम' 'इव' हे वधु । त्वमपि बहुतेजःसम्पन्ना, तथा च 'फलिनी' बहुतरफलशालिनी बहुपुत्रवतीति भाव 'भव' भूयाः । हे 'वनस्पते' उदुम्बरवृक्ष । 'पर्णं' स्वकीयच्छदम् 'नुत्वा नुत्वा' भूय प्रेरयित्वा 'रयि' धन मभीष्ट 'सूयताम्' प्रसूयताम्, अस्यै इति शेष ॥ १

হে বধূ ! এই তেজস্বী ও বহু ফল শালী উদুম্বর বৃক্ষের ন্যায় তুমিও তেজস্বিনী ও পুত্ররূপ বহু-ফল শালিনী হও । হে উদুম্বর বৃক্ষ ! তুমি নিজ পত্রগুলি দোলাইয়া দোলাইয়া এই বধূর জন্য অভীষ্ট ধন প্রসব কর অর্থাৎ স্বপত্রাবলির কম্পনানুসারে এই বধূর অভীষ্ট ধন হউক । ১

येनादितेः सीमानं नयति
प्रजापतिर्महते सौभगाय ।
तेनाहमस्यै सीमानं नयामि
प्रजामस्यै जरदष्टिं कृणोमि ॥ २

त्रिष्टुप् छन्द, प्रजापतिर्देवता, अस्य सीमन्तोन्नयने वि०—गो० गृ० २,७,६ सू० ।

'प्रजापतिः' जगत्स्रष्टा देव 'येन' कामेन (प्रजोत्पत्ति-कामेन) 'अदितेः' देवानां मातुः अखण्डनीयायाः स्वशक्तेः सीमानं यथाकालकार्यावधि नयति, सदैव नेतृत्वेन कारयति, अहम् (भर्त्ता) अपि तेन एव कामेन (प्रजोत्पत्तिकामेन) 'अस्यै' अस्याः सीमानं केशवीथिं नयामि नेतृत्वेन कारयामि; किञ्च प्रजापतेस्तथा नयने किं निमित्तम्? उच्यते—महते सौभगाय अतिविपुलसौभाग्याय, अस्मदादीनामिति यावत्। तथैवाहमपि एतयैव क्रियया 'अस्यै' अस्याः 'जरदष्टिं' जरावस्थापर्यन्तस्थायिनीं 'प्रजाम्' सन्ततिमपि 'कृणोमि' करोमि, अस्याः एतदेव महत् सौभाग्यम्, एतदर्थमेव सीमन्तोन्नयनम्॥ २

প্রজাপতি যে হেতুকে (প্রজোৎপত্তি কামনায়) দেবজননী অদিতির মাতৃ অখণ্ডনীয়া শোভা শক্তির কার্য্য সীমার সহিত উন্নয়ন করিয়াছেন, আমিও (ভর্ত্তা) সেই হেতুতে এই বধূর কেশকলাপের সীমায় উন্নয়ন করিতেছি। তাহার ঐ রূপ সীমার সেতু হইতেই আমাদের বিপুল সৌভাগ্য প্রকাশ পাইয়া থাকে। আবার এই সীমন্ত উন্নয়ন ক্রিয়ার প্রভাবে এই বধূ, যেন সৌভাগ্যবতী হইবে —ইহার সন্ততিগুলি জরাবস্থা পর্য্যন্ত জীবিত থাকিবে। ২

राकामहं सुहवां सुष्टुती हुवे
शृणोतु नः सुभगा बोधतु त्मना।
सीव्यत्वपः सूच्याच्छिद्यमानया
ददातु वीरं शतदायमुक्थ्यम्॥ ३

निचृज्जगतीछन्दः, राका देवता, तदुक्ता सीमन्तोन्नयने वि०—गो० गृ० २ ७ ३ सू०।

'अहं' भर्त्ता 'सुहवां' शोभनाह्वानयोग्यां 'राकाम्' उक्तरूपां पौर्णमासीं देवीं 'सुष्टुती' सुन्दरस्तुत्या 'हुवे' आह्वये। 'सुभगा' सौभाग्यवती सा देवी 'नः' अस्माकमेतदाह्वानं 'शृणोतु'; किञ्च 'त्मना' आत्मना स्वयमेव 'बोधतु' बुध्यतु एतदाह्वानाभिप्रायमिति भावः। बुद्ध्वा च सैव देवी 'अच्छिद्यमानया' छिद्ररहितया 'सूच्या' सीवनयन्त्रेण 'अपः' शुभानि कर्माणि यथा न छिद्यन्ते 'सीव्यतु' तथा येन बहुशुभकर्मक्षमा भवतिति; किञ्च 'शतदायं' शतदायेषु बहुदानयत्नेषु प्रशस्तं दानशीलं 'वीरं' पुत्रं 'ददातु' अस्यै गर्भिण्यै इति शेषः॥ २

সুন্দররূপে আহ্বানের যোগ্য রাকা* দেবীকে আমি (ভর্ত্তা) স্তুতি-নিবন্ধি সহ আহ্বান করিতেছি। সৌভাগ্যবতী তিনি আমাদের এই আহ্বান শ্রবণ করুন এবং স্বয়ংই এ আহ্বানের অভিপ্রায় বুঝিয়া লউন। বুঝিয়া উহার মস্তিষ্কে যাহা ছিন্ন হবে না এরূপ সূচি দ্বারা বহুতর সৎকর্ম করিবার ক্ষমতা সীবন (সেলাই) করুন এবং উহার গর্ভে বহুদানযোগ্য পুত্র প্রদান করুন। ৩

यास्ते राके सुमतयः सुपेशसो
याभि र्ददासि दाशुषे वसूनि।
ताभि र्नो अद्य सुमना उपागहि
सहस्रपोषं सुभगे रराणा॥ ४

विराड् जगतीच्छन्दः, राका देवता, अस्यवा सोमयागे विनियोग —श्रौ० सू० १,७,२।

---

* পূর্ণিমা দ্বিবিধা, পূর্ব্বা ও উত্তরা, প্রথমে প্রথম দিবসে চতুর্দ্দশীর -পরে পূর্ণিমা আরম্ভ হয় এবং দ্বিতীয় দিবসে প্রতিপদ আরম্ভের পূর্ব্বেই

'प्रजापति' जगत्स्रष्टा देव 'येन' कामेन (प्रजोत्पत्ति-कामेन) 'अदिते' देवाना मातु अखण्डनीयाया स्वयक्रे सीमानं यथाकालकार्य्यावधि नयति, सदैव नेतृत्वेन कारयति, अहम् (भर्त्ता) अपि 'तेन' एव कामेन (प्रजोत्पत्तिकामेन) 'अस्यै' अस्याः सीमानं केशवीथिं नयामि नेतृत्वेन कारयामि। किञ्च प्रजापतिस्तथा नयति किं निमित्तम्? उच्यते—'महते सौभगाय' पतिविपुलसौभाग्याय, अक्षरादीनामिति यावत्। तथैवाहमपि एतयैव क्रियया 'अस्यै' अस्याः 'जरदष्टिं' जरावस्थापर्य्यन्तस्थायिनीं 'प्रजाम्' सन्ततिमिति 'कृणोमि' करोमि, अस्या एतदेव महत् सौभाग्यम्, एतदर्थं मेव सीमन्तोन्नयनम्॥ २

প্রজাপতি যে হেতুতে (প্রজোৎপত্তি কামনায়) চরাচরসমূহের মাতৃ স্বরূপা অখণ্ডনীয়া দেবী অদিতির কার্য্য সীমার সহিত উন্নয়ন করিতেছেন, আমিও (ভর্ত্তা) সেই হেতুতে এই বধূর কেশকলাপের সীমার উন্নয়ন করিতেছি। প্রজাপতি যে উদ্দেশ্যে সীমার নেতৃত্ব করেন তাহা আমাদের বিপুল সৌভাগ্য প্রকাশ পাইবার জন্য, আমারও এই সীমন্তোন্নয়ন ক্রিয়ার প্রভাবে এই বধূ মহাসৌভাগ্যবতী হইবে —ইহার সন্ততিগুলি জরাবস্থা পর্য্যন্ত জীবিত থাকিবে। ২

राका मह्‌ए सुहवां सुष्टुती हुवे
शृणोतु नः सुभगा बोधतु त्मना।
सीव्यत्वपः सूच्याच्छिद्यमानया
ददातु वीरं शतदायमुक्थ्यम् ॥ ३

विराड् जगतीछन्द, राका देवता, अनेना सीमन्तोन्नयने वि०—गो० गृ० २०७सू०।

'अह भर्त्ता 'सुहवा' शोभनाह्वानयोग्यां 'राकाम्' एतन्नाम्नीं पौर्णमासीं देवीं 'सुष्टुती' सुन्दरस्तुत्या 'हुवे' आह्वये । 'सुभगा' सौभाग्यवती सा देवी 'नः' अस्माक मेतदाह्वानं 'शृणोतु', किञ्च 'त्मना' आत्मना स्वयमेव 'बोधतु' बुध्यतु एतदाह्वानाभिप्राय मिति भाव । तुष्टा च सैव देवी 'अच्छिद्यमानया' सुदृढया 'सूच्या' लौहमयन्त्रेण 'अपः' शुभानि कर्माणि यथा मच्छिन्नानि 'सीव्यतु' तथा चैव बहुशुभकर्मधना भवन्त्विति, किञ्च 'शतदायं' शतदायेषु बहुदानधनेषु प्रशस्त दानशौण्ड 'वीरं' पुत्र' 'ददातु' अस्मै गर्भिण्यै इति शेष ॥ २

সুন্দরস্তবে আহ্বানের যোগ্যা রাকা* দেবীকে আমি (ভর্তা) স্তুতি বিনতি দ্বারা আহ্বান করিতেছি। সৌভাগ্যবতী তিনি আমাদের এই আহ্বান শ্রবণ করুন এবং স্বয়ংই এ আহ্বানের অভিপ্রায় বুঝিয়া লউন। সুনিয়া ইহার মধ্যিতে যাহা ছিন্ন হয় না এরূপ সূচি দ্বারা বস্ত্র সংকর্ম্ম করিবার ক্ষমতা সীবন (সেলাই) করুন এবং ইহার গর্ভে বহুদানশীল পুত্র প্রদান করুন। ৩

यास्ते राके सुमतयः सुपेशसो
याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि
सहस्रपोषं सुभगे रराणा ॥ ४

त्रिष्टुप् जगतीच्छन्द, राका देवता यशस्या सीमन्तोन्नयने विनियोग —गो० गृ० १३८ ।

* পূর্ণমাসী দ্বিবিধা, পূর্ণা ও উত্তরা, প্রায়ই প্রথম দিবসে চতুর্দশীর পরে পূর্ণিমা আরম্ভ হয় এবং দ্বিতীয় দিবসে প্রতিপৎ আরম্ভের পূর্ব্বেই

हे 'सुभगे' सौभाग्यवति! 'राके' उत्तरपौर्णमासि! 'ते' तव 'याः' 'सुपेशसः' कल्याणरूपाणि 'सुमतयः' कल्याणमतयश्च विद्यन्ते, 'याभिः' सुरूपसुमतिभिः युक्ता 'दाशुषे' हविर्दानशीलाय यजमानाय 'वसूनि' धनानि 'ददासि'; 'ताभिः' सुरूपमतिभिरेव उपेता, 'सुमनाः' प्रसन्नचित्ता त्वं 'नः' अस्मभ्यम् 'सहस्रपोषं' बहुजनप्रतिपालकं पुत्रं 'रराणा' ददाना सती 'अद्य' सीमन्तोन्नयनक्षणे 'उपागहि' समागच्छ ॥ ४

হে সৌভাগ্যবতি! রাকে! তোমার যে সমস্ত সুন্দর রূপ ও সুন্দর মতি আছে, যেরূপে ও যে মতিতে দানশীলদিগকে বিবিধ ধন দান করিয়া থাক, সেই সমস্ত রূপ ও মতির সহিত প্রসন্নমনে আমাদিগকে বহুপোষী পুত্র প্রদানার্থে অদ্য আগমন কর ॥ ৪ ॥

( किं पश्यसि ? )

प्रजां पशूंत्सौभाग्यं मह्यं दीर्घायुष्ट्वं पत्युः ॥ ५

याजुषबृहती छन्दः आत्माशासना देवता, आशीर्वादादिवचने वि०—गो०गृ०२,७,१०।

किम्पश्यसीति प्रश्नो गोभिलोक्तः; न तु मन्त्रांशः; परमिह क्रमेणान्वयनिविष्टः। भर्त्ता पृच्छेत्—हे वधु! किं पश्यसि? भद्र, स्थाल्यामिति शेषः। तत उत्तरं वध्वा कथनीय एष मन्त्रः

---

শেষ হইয়াছে; ইহার মধ্যে প্রথম দিনের পূর্ণিমাই পূর্ব্বা এবং উত্তর দিনের পূর্ণিমাই উত্তরা। এই পূর্ব্বা পূর্ণিমাকে 'অনুমতি' এবং উত্তরাকে 'রাকা' কহে, ৫ রাকার চন্দ্রেই অখণ্ডমণ্ডল দৃষ্ট হয় এবং সেই দিবসেই সীমন্তোন্নয়ন প্রসিদ্ধ। অমাবাস্যাও এইরূপ দ্বিবিধা। পূর্ব্বা অমাবাস্যাকে 'সিনীবালী' এবং উত্তরা অমাবাস্যাকেই 'কুহূ' কহে।

